॥ धर्मशास्तासहस्रनामस्तोत्रम् ॥

ॐ पूर्ण पुष्कलाम्बा समेत श्रीहरिहरपुत्रस्वामिने नमः ।
श्री धर्मशास्तासहस्रनामस्तोत्रम् ।
अस्य श्री हरिहरपुत्रसहस्रनामस्तोत्रमालामन्त्रस्य
अर्धनारीश्वर ऋषिः । अनुष्टुप्छन्दः ।
श्री हरिहरपुत्रो देवता ।
ह्रां बिजं ह्रीं शक्तिः ह्रूं कीलकम् ।
श्री हरिहरपुत्र प्रसादसिध्यर्थे जपे विनियोगः ॥

अथ करन्यासः ।
ह्रां अङ्गुष्ठाभ्यां नमः ।
ह्रीं तर्जनीभ्यां नमह् ।
ह्रूं मध्यमाभ्याण् नमः ।
ह्रैं अनामिकाभ्यां नमः ।
ह्रैं कनिष्ठिकाभ्यां नमः ।
ह्रः करतलकरपृष्ठाभ्यां नमः ॥

अथाञ्गन्यासः ।
ह्रां हृदयाय नमः ।
ह्रीं शिरसे स्वाहा ।
ह्रूं शिखायै वषट् ।
ह्रैं कवचाय हम् ।
ह्रौं नेत्रत्रयाय वौषट् ।
ह्रः अस्त्राय फट् ।
भुर्भुवस्सुवरों इति दिग्बन्धः ॥

॥ ध्यानम् ॥

ध्यायेदुमापतिरमापति भाग्यपुत्रम् ।
वेत्रोज्वलत् करतलं भसिताभिरामम् ॥

विश्वैक विश्व वपुषं मृगया विनोदम् ।
वांछानुरुप फलदं वर भुतनाथम् ॥

आशयामकोमलविशालतनुं विचित्र-
वासो वसानं अरुणोत्पलदामहस्तम् ।
उत्तुङ्गरत्नमकुटं कुटिलाग्रकेशं

शास्तारं इष्टवरदं शरणं प्रपद्ये ॥

पञ्चोपचाराः ।
लं पृथिव्यात्मने गन्धं समर्पयामि ।
हं आकाशात्मने पुष्पाणि समर्पयामि ।
यं वाय्वात्मने धूपमाघ्रापयामि ।
रं अग्न्यात्मने दीपं दर्शयामि ।
वं अमृतात्मने अमृतं महानैवेद्यं निवेदयामि ।
सं सर्वात्मने सर्वोपचारपूजां समर्पयामि ।

मूलमन्त्रः  ओं घ्रूं नमः पराय गोप्त्रे नमः ॥

ॐ नमो भगवते भूतनाथाय ।

ॐ शिवपुत्रो महातेजाः शिवकार्यधुरन्धरः ।
शिवप्रद शिवज्ञानी शैवधर्मसुरक्षकः ॥ १॥

शंखधारि सुराध्यक्ष चन्द्रमौलिस्सुरोत्तमः ।
कामेश कामतेजस्वी कामादिफलसंयुतः ॥ २॥

कल्याण कोमलांगश्च कल्याणफलदायकः ।
करुणाब्धि कर्मदक्ष करुणारससागरः ॥ ३॥

जगत्प्रियो जगद्रक्षो जगदानन्ददायकः ।
जयादि शाक्ति संसेव्यो जनाह्लादो जिगीषुकः ॥ ४॥

जितेन्द्रियो जितक्रोधो जितसेवारिसंखः ।
जैमिन्यदृषिसंसेव्यो जरामरणनाशकः ॥ ५॥

जनार्दन सुतो ज्येष्ठो ज्येष्ठादिगणसेवितः ।
जन्महीनो जितामित्रो जनकेनाभिपूजितः ॥ ६॥

परमेष्ठी पशुपति पंकजासनपूजितः ।
पुरहन्ता पुरत्राता परमैश्वर्यदायकः ॥ ७॥

पवनादि सुरैः सेव्यः पंचब्रह्मपरायणः ।
पार्वती तनयो ब्रह्म परानन्द परात्परः ॥ ८॥

ब्रह्मिष्टो ज्ञाननिरतो गुणागुणनिरुपकः ।
गुणाध्यक्षो गुणनिधिः गोपालेनाभिपुजितः ॥ ९॥

गोरक्षको गोधनदो गजारुढो गजप्रियः ।
गजग्रिवो गजस्कन्दो गभस्तिर्गोपतिः प्रभुः ॥ १०॥

ग्रामपालो गजाध्यक्षो दिग्गजेनाभिपूजितः ।
गणाध्यक्षो गणपतिर्गवां पतिरहर्पतिः ॥ ११॥

जटाधरो जलनिभो जैमिन्यादृषिपूजितः ।
जलन्थर निहन्ता च शोणाक्षश्शोणवासकः ॥ १२॥

सुराथिपश्शोकहन्ता शोभाक्षस्सुर्य तैजसः ।
सुरार्चितस्सुरैर्वन्घः शोणांगः शाल्मलीपतिः ॥ १३॥

सुज्योतिश्शरवीरघ्नः शरत्च्चन्द्रनिभाननः ।
सनकादिमुनिध्येयः सर्वज्ञानप्रदो विभुः ॥ १४॥

हलायुधो हंसनिभो हाहाहूहू मुखस्तुतः ।
हरिहरप्रियो हंसो हर्यक्षासनतत्परः ॥ १५॥

पावनः पावकनिभो भक्तपापविनाशनः ।
भसितांगो भयत्राता भानुमान् भयनाशनः ॥ १६॥

त्रिपुण्ड्रकस्त्रिनयनः त्रिपुण्ड्रांगितमस्तकः ।
त्रिपुरघ्नो देववरो देवारिकुलनाशकः ॥ १७॥

देवसेनथिपस्तेजस्तेजोराशिर्दशाननः ।
दारुणो दोषहन्ता च दोर्दण्डो दण्डनायकः ॥ १८॥

धनुष्पाणिर्धराध्यक्षो धनिको धर्मवत्सलः ।
धर्मज्ञो धर्मनिरतो धनुर्श्शास्त्रपरायणः ॥ १९॥

स्थूलकर्णः स्थूलतनुः स्थूलाक्षः स्थूलबाहुकः ।
तनूत्तमत्तनुत्राणस्तारकस्तेजसांपतिः ॥ २०॥

योगीश्वरो योगनिधिर्योगिनो योगसंस्थितः ।
मन्दारवाटिकामत्तो मलयाचलवासभूः ॥ २१॥

मन्दारकुसुमप्रख्यो मन्दमारुतसेवितः ।
महाभाश्च महावक्षा मनोहरमदार्चितः ॥ २२॥

महोन्नतो महाकायो महानेत्रो महाहनुः ।
मरुत्पूज्यो मानधनो मोहनो मोक्षदायकः ॥ २३॥

मित्रो मेधा महौजस्वी महावर्षप्रदायकः ।
भाषको भाष्यशास्त्रज्ञो भानुमान् भानुतैजसः ॥ २४॥

भिषग् भवानिपुत्रश्च भवतारणकारणः ।
नीलांबरो नीलनिभो नीलग्रीवो निरंजनः ॥ २५॥

नेत्रत्रयो निषादज्ञो नानारत्नोपशोभितः ।
रत्नप्रभो रमापुत्रो रमया परितोषितः ॥ २६॥

राजसेव्यो राजधनः रणदोर्दण्डमण्डितः ।
रमणो रेणुकासेव्यो राजनीचरदारणः ॥ २७॥

ईशान इभराट्सेव्य इषणात्रयनाशनः ।
इडावासो हेमनिभो हैमप्राकारशोभितः ॥ २८॥

हयप्रियोहयग्रीवो हंसो हरिहरात्मजः ।
हाटकस्फटिकप्रख्यो हंसारूओढेन सेवितः ॥ २९॥

वनवासो वनाध्यक्षो वामदेवो वराननः ।
वैवस्वतपतिर्विष्णुः विअराड्रूपो विशांपतिः ॥ ३०॥

वेणुनादो वरग्रिवो वराभयकरान्वितः ।
वर्चस्वी विपुलग्रीवो विपुलाक्षो विनोदवान् ॥ ३१॥

वैणवारण्य वासश्च वामदेवेनसेवितः ।
वेत्रहस्तो वेदविधिर्वंशदेवो वरान्ग़कः ॥ ३२॥

ह्रींग़ारो ह्रींमना ह्रष्टो हिरण्यः हेमसम्भवः ।
हूताशो हूतनिष्पन्नो हूँगारकृतिसुप्रभः ॥ ३३॥

हव्यवाहो हव्यकरश्चाट्टहासोऽपराहतः ।

अणुरूपो रूपकरश्चाजरोऽतनुरूपकः ॥ ३४॥

हंसमन्त्रश्चहूतभुक् हेमम्बरस्सुलक्षणः ।
नीपप्रियो नीलवासाः निधिपालो निरातपः ॥ ३५॥

क्रोडहस्तस्तपस्त्राता तपोरक्षस्तपाह्वयः ।
मूर्ताभिषिक्तो मानी च मन्त्ररूपोः मृडो मनुः ॥ ३६॥

मेधावी मेदसो मुष्णुः मकरो मकरालयः ।
मार्त्ताण्डो मंजुकेशश्च मासपालो महौषधिः ॥ ३७॥

श्रोत्रियश्शोभमानश्च सविता सर्वदेशिकः ।
चन्द्रहासश्शमश्शक्तः शशिभासश्शमाधिकः ॥ ३८॥

सुदन्तस्सुकपोलश्च षड्वर्णस्संपदोऽधिपः ।
गरलः कालकण्ढश्च गोनेता गोमुखप्रभुः ॥ ३९॥

कौशिकः कालदेवश्च क्रोशकः क्रौंचभेदकः ।
क्रियाकरः कृपालुश्च करवीरकरेरुहः ॥ ४०॥

कन्दर्पदर्पहारी च कामदाता कपालकः ।
कैलासवासो वरदो विरोचनो विभावसुः ॥ ४१॥

बभ्रुवाहो बलाध्यक्षः फणामणिविभुषणः ।
सुन्दरस्सुमुखः स्वच्चः सफासच्च सफाकरः ॥ ४२॥

शरानिवृत्तश्शक्रास्ः शरणागतपालकः ।
तीष्णदंष्ट्रो दीर्घजिह्व पिंगलाक्षः पिशाचहा ॥ ४३॥

अभेद्यश्चाङ्गदार्ड्यश्चो भोजपालोऽध भूपतिः ।
गृध्रनासोऽविषह्यश्च् दिग्देहो दैन्यदाहकः ॥ ४४॥

बाडवपूरितमुखो व्यापको विषमोचकः ।
वसन्तस्समरक्रुद्धः पुंगवः पङ्गजासनः ॥ ४५॥

विश्वदर्पो निस्चिताज्ञो नागाभरणभूषितः ।
भरतो भैरवाकारो भरणो वामनक्रियः ॥ ४६॥

सिम्हास्यस्सिंहरूपश्च सेनापतिस्सकारकः ।
सनतनस्सिद्धरूपी सिद्धधर्मपरायणः ॥ ४७॥

आदित्यरूप्श्चापद्घ्नश्चामृताब्धिनिवासभूः ।
युवराजो योगिवर्य उषस्तेजा उडुप्रभः ॥ ४८॥

देवादिदेवो दैवज्ञस्ताम्रोष्टस्ताम्रलोचनः ।
पिंगलाक्ष पिच्छचूडः फणामणि विभूषितः ॥ ४९॥

भुजंगभूषणो भोगो भोगानन्दकरोऽव्ययः ।
पंचहस्तेन सम्पुज्यः पंचबाणेनसेवितः ॥ ५०॥

भवश्शर्वो भानुमयः प्रजपत्यस्वरुपकः ।
स्वच्चन्दश्चन्दश्शस्त्रज्ञो दान्तो देव मनुप्रभुः ॥ ५१॥

दशभुक्च दशाध्यक्षो दानवानां विनाशनः ।
सहस्राक्षश्शरोत्पन्नः शतानन्दसमागमः ॥ ५२॥

गृध्रद्रिवासो गंभिरो गन्धग्राहोगणेश्वरः ।
गोमेधो गण्ढकावासो गोकुलैः परिवारितः ॥ ५३॥

परिवेषः पदज्ञानी प्रियन्ङुद्रुमवासकः ।
गुहावासो गुरुवरो वन्दनीयो वदान्यकः ॥ ५४॥

वृत्ताकारो वेणुपाणीर्वीणादण्डदरोहरः ।
हैमीड्यो होत्रुसुभगो हौत्रज्ञश्चौजसां पतिः ॥ ५५॥

पवमानः प्रजातन्तुप्रदो दण्डविनाशनः ।
निमीडयो निमिषार्धज्ञो निमिषाकारकारणः ॥ ५६॥

लिगुडाभो लिडाकारो लक्ष्मीवन्द्यो वरप्रभुः ।
इडाज्ञः पिंगलावासः सुषुम्नामध्यसंभवः ॥ ५७॥

भिक्षाटनो भीमवर्चा वरकीर्तिस्सभेश्वरः ।
वाचोऽतीतो वरनिधिः परिवेत्ताप्रमाणकः ॥ ५८॥

अप्रमेयोऽनिरुद्धश्चाप्यनन्दादित्यसुप्रभः ।
वेषप्रियो विषग्राहो वरदानकरोत्तमः ॥ ५९॥

विपिनः वेदसारश्च वेदान्तैः परितोषितः ।
वक्रागमो वर्चवचा बलदाता विमानवान् ॥ ६०॥

वज्रकान्तो वम्शकरो वटुरक्षाविशारदः ।
वप्रक्रीडो विप्रपुज्या वेलाराशिश्चलालकः ॥ ६१॥

कोलाहलः क्रोडनेत्रः
क्रोडास्यश्च कपालभृत् ।
कुंजरेड्या मंजुवासाः
क्रियामानः क्रियाप्रदः ॥ ६२॥

क्रीडानाधः कीलहस्थः क्रोशमानो बलाधिकः ।
कनको होत्रुभागी च खवासः खचरः खगः ॥ ६३॥

गणको गुणनिर्दुष्टो गुणत्यागी कुशाधिपः ।
पाटलः पत्रधारी च पलाशः पुत्रवर्धनः ॥ ६४॥

पित्रुसच्चरितः प्रेष्टः पापभस्म पुनश्चुचिः ।
फालनेत्रः फुल्लकेशः फुल्लकल्हारभूषितः ॥ ६५॥

फणिसेव्यः पट्टभद्रः पटुर्वाग्मी वयोधिकः ।
चोरनाट्यश्चोरवेषस्चोरघ्नश्चौर्यवर्धनः ॥ ६६॥

चंचलाक्षश्चामरको मरीचिर्मदगामिकः ।
म्रुडाभो मेषवाहश्च मैथिल्यो मोचकोमनुः ॥ ६७॥

मनुरूपो मन्त्रदेवो मंत्रराशिर्महाद्दड्ः ।
स्थूपिज्ञो धनदाता च देववन्ध्यश्चतारणः ॥ ६८॥

यज्ञप्रियो यमाध्यक्ष इभक्रीड इभेक्षण ।
दधिप्रियो दुराधर्षो दारुपालो दनूजहाः ॥ ६९॥

दामोदरोदामधरो दक्षिणामूर्तिरूपकः ।
शचीपूज्यश्शंखकर्णश्चन्द्रचूडो मनुप्रियः ॥ ७०॥

गुडरूपो गुडाकेशः कुलधर्मपरायणः ।
कालकण्ढो गाढगात्रो गोत्ररूपः कुलेश्वरः ॥ ७१॥

आनन्दभैरवाराध्यो हयमेधफलप्रदः ।
दध्यन्नासक्तहृदयो गुडान्नप्रीतमानसः ॥ ७२॥

खृतान्नासक्तहृदयो गौरांगोगर्व्वभंजकः ।
गणेशपूज्यो गगनः गणानां पतिरूर्जितः ॥ ७३॥

छद्महीनश्शशिरदः शत्रूणां पतिरङ्गिराः ।
चराचरमयश्शान्तः शरभेशश्शतातपः ॥ ७४॥

वीराराध्यो वक्रगमो वेदांगो वेदपारगः ।
पर्वतारोहणः पूषा परमेशः प्रजापतिः ॥ ७५॥

भावज्ञो भवरोगघ्नो भवसागरतारणः ।
चिदग्निदेहश्चिद्रूपस्चिदानन्दश्चिदाकृतिः ॥ ७६॥

नाट्यप्रियो नरपतिर्नरनारायणार्चितः ।
निषादराजो नीहारो नेष्टा निष्ठूरभाषणः ॥ ७७॥

निम्नप्रियो नीलनेत्रो नीलाङ्गो नीलकेशकः ।
सिंहाक्षस्सर्वविघ्नेशस्सामवेदपरायणः ॥ ७८॥

सनकादिमुनिध्येयः शर्व्वरीशः षडाननः ।
सुरूपस्सुलभस्स्वर्गः शचीनाथेन पूजितः ॥ ७९॥

काकीनः कामदहनो दग्धपापो धराधिपः ।
दामग्रन्धी शतस्त्रीशस्तश्रीपालश्च तारकः ॥ ८०॥

ताम्राक्षस्तीष्णदम्ष्ट्रश्च तिलभोज्यस्तिलोदरः ।
माण्डुकर्णो मृडाधीशो मेरुवर्णो महोदरः ॥ ८१॥

मार्ताण्डभैरवाराध्यो मणिरूपो मरुद्वहः ।
माषप्रियो मधुपानो मृणालो मोहिनीपति ॥ ८२॥

महाकामेशतनयो माधवो मदगर्व्वितः ।
मूलाधाराम्बुजावासो मूलविद्यास्वरूपकः ॥ ८३॥

स्वाधिष्टानमयः स्वस्थः स्वस्थिवाक्य स्रुवायुधः ।

मणिपूराब्जनिलयो महाभैरवपूजितः ॥ ८४॥

अनाहताब्जरसिको ह्रींगाररसपेशलः ।
भूमध्यवासो भूकान्तो भरद्वाजप्रपूजितः ॥ ८५॥

सहस्राराम्बुजावासः सविता सामवाचकः ।
मुकुन्दश्च गुणातीतो गुणपुज्यो गुणाश्रयः ॥ ८६॥

धन्यश्च धनभृद् दाहो धनदानकरांबुजः ।
महाशयो महातीतो मायाहीनो मदार्चितः ॥ ८७॥

माठरो मोक्षफलदः सद्वैरिकुलनाशनः ।
पिंगलः पिंछचूड्श्च पिशिताश पवित्रकः ॥ ८८॥

पायसान्नप्रियः पर्व्वपक्षमासविभाजकः ।
वज्रभूषो वज्रकायो विरिंजो वरवक्षण ॥ ८९॥

विज्ञानकलिकाबृन्दो विश्वरूपप्रदर्शकः ।
डंभघ्नो दमखोषघ्नो दासपालस्तपौजसः ॥ ९०॥

द्रोणकुम्भाभिषिक्तश्च द्रोहिनाशस्तपातुरः ।
महावीरेन्द्रवरदो महासंसारनाशनः ॥ ९१॥

लाकिनी हाकिनीलभ्धो
लवणाम्भोधितारणः ।
काकिलः कालपाशघ्नः
कर्मबन्धविमोचकः ॥ ९२॥

मोचको मोहनिर्भिन्नो भगाराध्यो ब्रुहत्तनुः ।
अक्षयोऽक्रूरवरदो वक्रागमविनाशनः ॥ ९३॥

डाकीनः सूर्यतेजस्वी सर्प्पभूषश्च सद्गुरुः ।
स्वतंत्रः सर्वतन्त्रेशो दक्षिणादिगधीश्वरः ॥ ९४॥

सच्चिदानन्दकलिकः प्रेमरूपः प्रियंगरः ।
मिध्याजगदधिष्टानो मुक्तिदो मुक्तिरूपकः ॥ ९५॥

मुमुक्षुः कर्मफलदो मार्गदक्षोऽधकर्मठः ।

महाबुद्धो महाशुद्धः शुकवर्णः शुकप्रियः ॥ ९६॥

सोमप्रियः स्वरप्रीतः पर्व्वाराधनतत्परः ।
अजपो जनहम्सश्च फलपाणि प्रपूजितः ॥ ९७॥

अर्चितो वर्धनो वाग्मी वीरवेषो विधुप्रियः ।
लास्यप्रियो लयकरो लाभालाभविवर्जितः ॥ ९८॥

पंचाननः पंचगुढः पंचयज्ञफलप्रदः ।
पाशहस्तः पावकेशः पर्ज्जन्यसमगर्जनः ॥ ९९॥

पपारिः परमोदारः प्रजेशः पंगनाशनः ।
नष्टकर्मा नष्टवैर इष्टसिद्धिप्रदायकः ॥ १००॥

नागाधीशो नष्टपाप इष्टनामविधायकः ।
पंचकृत्यपरः पाता पंचपंचातिशायिकः ॥ १०१॥

पद्माक्षोः पद्मवदनः पावकाभः प्रियङ्गरः ।
कार्त्तस्वराङ्गो गोउराङ्गो गौरीपुत्रो धनेश्वरः ॥ १०२॥

गणेशास्लिष्टदेहश्च शीतांशुः शुभदितिः ।
दक्षध्वंसो दक्षकरो वरः कात्यायनीसुतः ॥ १०३॥

सुमुखो मार्गणो गर्भो गर्व्वभङ्गः कुशासनः ।
कुलपालपतिश्रेष्ट पवमानः प्रजाधिपः ॥ १०४॥

दर्शप्रियो निर्व्विकारो दीर्खकायो दिवाकरः ।
भेरीनादप्रियो बृन्दो बृहत्सेनः सुपालकः ॥ १०५॥

सुब्रह्मा ब्रह्मरसिको रसज्ञो रजताद्रिभाः ।
तिमिरघ्नो मिहीराभो महानीलसमप्रभः ॥ १०६॥

श्रीचन्दनविलिप्ताङ्गः श्रीपुत्रःश्रीतरुप्रियः ।
लाक्षावर्णो लसत्कर्णो रजनीध्वंसि सन्निभः ॥ १०७॥

बिन्दुप्रियोंऽम्बिकापुत्रो बैन्दवो बलनायकः ।
आपन्नतारकस्तप्तस्तप्तकृच्चफलप्रदः ॥ १०८॥

मरुद्धतो महाखर्व्वश्चीरवासाः शिखिप्रियः ।
आयुष्माननखो दूत आयुर्वेदपरायणः ॥ १०९॥

हंसः परमहंसश्चाप्यवधूताश्रमप्रियः ।
अश्ववेगोऽश्वहृदयो हय धैर्यः फलप्रदः ॥ ११०॥

सुमुखो दुर्म्मुखो विघ्नो
निर्विघ्नो विघ्ननाशनः ।
आर्यो नाथोऽर्यमाभासः ।
फाल्गुनः फाललोचनः ॥ १११॥

अरातिघ्नो घनग्रीवो ग्रीष्मसूर्य समप्रभः ।
किरीटी कल्पशास्त्रज्ञः कल्पानलविधायकः ॥ ११२॥

ज्ञानविज्ञानफलदो विरिंजारि विनाशनः ।
वीरमार्त्ताण्डवरदो वीरबाहुश्च पूर्वजः ॥ ११३॥

वीरसिंहासनो विज्ञो वीरकार्योऽस्थदानवः ।
नरवीरसुहृद्भ्राता नागरत्नविभूषितः ॥ ११४॥

वाचस्पतिः पुरारातिः संवर्त्तः समरेश्वरः ।
उरुवाग्मीह्युमापुत्रः उडुलोकसुरक्षकः ॥ ११५॥

शृंगाररससंपूर्णः सिन्दूरतिलकांगितः ।
कुंगुमांगितसर्वांगः कालकेयविनाशनः ॥ ११६॥

मत्तनागप्रियो नेता नागगन्धर्वपूजितः ।
सुस्वप्नबोधको बोधो गौरीदुस्वप्ननाशनः ॥ ११७॥

चिन्ताराशिपरिध्वंसी चिन्तामणिविभूषितः ।
चराचरजगत्सृष्टा चलत्कुण्डलकर्णयुक् ॥ ११८॥

मुकुरास्यो मूलनिधिर्निधिद्वयनिषेवितः ।
नीराजनप्रीतमनाः नीलनेत्रो नयप्रदः ॥ ११९॥

केदारेशः किरातश्च कालात्मा कल्पविग्रहः ।
कल्पान्दभैरवाराध्यः कङ्गपत्रशरायुधः ॥ १२०॥

कलाकाष्ठस्वरूपश्च ऋतुवर्षादिमासवान् ।
दिनेशमण्डलावासो वासवादिप्रपूजितः ॥ १२१॥

बहूलास्तंबकर्मज्ञः पंचाशद्वर्णरूपकः ।
चिन्ताहीनश्चिदाक्रान्तः चारुपालोहलायुधः ॥ १२२॥

बन्दूककुसुमप्रख्यः परगर्व्वविभण्जनः ।
विद्वत्तमो विराधग्घ्नः सचित्रश्चित्रकर्मकः ॥ १२३॥

संगीतलोलुपमनाः स्निग्धगम्भीरगर्जितः ।
तुङ्गवक्त्रःस्तवरसस्चाभ्राभो भ्रूमरेक्षणः ॥ १२४॥

लीलाकमलहस्ताब्जो बालकुन्दविभूषितः ।
लोध्रप्रसवशुधाभः शिरीषकुसुमप्रियः ॥ १२५॥

त्रस्तत्राणकरस्तत्वं तत्ववाक्यार्थबोधकः ।
वर्षीयम्श्च विधिस्तुत्यो वेदान्त प्रतिपादकः ॥ १२६॥

मूलभूतो मूलतत्वं मूलकारणविग्रहः ।
आदिनाथोऽक्षयफलः पाणिजन्माऽपराजितः ॥ १२७॥

गानप्रियो गानलोलो महेशो विज्ञमानसः ।
गिरीजास्तन्यरसिको गिरिराजवरस्तुत ॥ १२८॥

पीयुषकुम्भहस्ताब्जः पाशत्यागी चिरन्तनः ।
सुलालालसवक्त्राब्जः सुरद्रुमफलेप्सितः ॥ १२९॥

रत्नहाटकभूषांगो रवणाभिप्रपूजितः ।
कनत्कालेयसुप्रीतः क्रौंजगर्व्वविनाशनः ॥ १३०॥

अशेषजनसंमोह आयुर्विद्याफलप्रदः ।
अवबद्धदुकूलांगो हारालंकृतकन्धरः ॥ १३१॥

केतकीकुसुमप्रीतः कलभैः परिवारितः ।
केकाप्रियः कार्तिकेयः सारंगनिनदप्रियः ॥ १३२॥

चातकालापसंतुष्टश्चमरीमृगसेवितः ।
आम्रकूटाद्रिसंचारी चाम्नायफलदायकः ॥ १३३॥

धृताक्षसूत्रपाणिश्चाप्यक्षिरोगविनाशनः ।
मुकुन्दपूज्यो मोहांगो मुनिमानसतोषितः ॥ १३४॥

तैलाभिषिक्तसुशीरास्तर्ज्जनीमुद्रिकायुतः ।
तटातकामनः प्रीतस्तमोगुणविनाशनः ॥ १३५॥

अनामयोऽप्यनादर्शंचाज्र्जुनाभो हुतप्रियः ।
षाड्गुण्य परिसम्पुर्णस्सप्ताश्वादिगृहैस्तुतः ॥ १३६॥

वीतशोकःप्रसादज्ञः सप्तप्राणवरप्रदः ।
सप्तार्चिश्चत्रिनयनस्त्रिवेणिफलदायकः ॥ १३७॥

कृष्णवर्त्मा वेदमुखो दारुमण्डलमध्यगः ।
वीरनूपुरपादाब्जोवीरकंकुणपाणिमान् ॥ १३८॥

विश्वमूर्तिश्शुधमुखश्शुधभस्मानुलेपनः ।
शुंभध्वंसिन्या संपूज्यो रक्तबीजकुलान्दकः ॥ १३९॥

निषादादिस्वरप्रीतः नमस्कारफलप्रदः ।
भक्तारिपंचदातायी सज्जीकृतशरायुधः ॥ १४०॥

अभयङ्करमंत्रज्ञः कुब्जिकामंत्रविग्रहः ।
धूम्राशश्चोग्रतेजस्वी दशकण्ठविनाशनः ॥ १४१॥

आशुगायुधहस्ताब्जो गदायुधकरांबुजः ।
पाशायुधसुपाणिश्च कपालायुधसद्भुजः ॥ १४२॥

सहस्रशीर्षवदनः सहस्रद्वयलोचनः ।
नानाहेतिर्धनुष्पाणिः नानासृग्भूषणप्रियः ॥ १४३॥

आश्यामकोमलतनूरारक्तापांगलोचनः ।
द्वादशाहक्रतुप्रीतः पौण्डरीकफलप्रदः ॥ १४४॥

अप्तोराम्यक्रतुमयश्चयनादिफलप्रदः ।
पशुबन्धस्यफलदो वाजपेयात्मदैवतः ॥ १४५॥

आब्रह्मकीटजननावनात्मा चंबकप्रियः ।

पशुपाशविभागज्ञः परिज्ञानप्रदायकः ॥ १४६॥

कल्पेश्वरः कल्पवर्यो जातवेदः प्रभाकरः ।
कुम्भीश्वरः कुम्भपाणीः कुंकुमाक्तललाटकः ॥ १४७॥

शिलीध्रपत्रसंकाशः सिंहवक्त्रप्रमर्दनः ।
कोकिलक्वणनाकर्णी कालनाशन तत्परः ॥ १४८॥

नैय्यायिकमतघ्नश्च बौद्धसंखविनाशनः ।
धृतहेमाब्जपाणिश्च होमसन्तुष्टमानसः ॥ १४९॥

पित्रुयज्ञस्यफलदः पित्रुवज्जनरक्षकः ।
पदातिकर्मनिरतः पृषदाज्यप्रदायकः ॥ १५०॥

महासुरवधोद्युक्तः स्वस्त्रप्रत्यस्त्रवर्षकः ।
महावर्षतिरोधानः नागाभृतकराम्बुजः ॥ १५१॥

नमः स्वाहावषट् वौषट् वल्लवप्रतिपादकः ।
महीरसदृशग्रीवो महीरसदृशस्तवः ॥ १५२॥

तन्त्रीवादनहस्ताग्रः संगीतप्रीतमानसः ।
चिदंशमुकुरावासो मणिकूटाद्रि संचरः ॥ १५३॥

लीलासंचारतनुको लिङ्गशास्त्रप्रवर्तकः ।
राकेन्दुद्युतिसंपन्नो यागकर्मफलप्रदः ॥ १५४॥

मैनाकगिरिसंचारी मधुवंशविनाशनः ।
तालखण्डपुरावासः तमालनिभतैजसः ॥ १५५॥

श्री धर्मशास्ता सहस्रनामस्तोत्रं सम्पूर्णम् ।